# .. shrIkaNTheshastotram ..



# ॥ श्रीकण्ठेशस्तोत्रम् ॥

## Sanskrit Document Information

Text title : shrIkaNTheshastotram

File name : shrIkaNTheshastotram.itx

Location : doc_shiva

Language : Sanskrit

Subject : philosophy/hinduism/religion

Proofread by : PSA Easwaran psaeaswaran at gmail.com

Description-comments : Brihatstotraratnakara 1 newer, Narayana Ram Acharya, Nirnayasagar, stotrasankhyA 225

Latest update : March 25, 2017

Send corrections to : Sanskrit@cheerful.com

Site access : http://sanskritdocuments.org



March 25, 2017

*sanskritdocuments.org*

# ॥ श्रीकण्ठेशस्तोत्रम् ॥

श्रीगणेशाय नमः ॥

आर्द्रान्तःकरणस्त्वं यस्मादीशान भक्तवृन्देषु ।
आर्द्रोत्सवप्रियोऽतः श्रीकण्ठात्रास्ति नैव सन्देहः ॥ १॥

द्रष्टृस्तवोत्सवस्य हि लोकान्पापात्तथा मृत्योः ।
मा भीरस्त्विति शम्भो मध्येतिर्यग्गतागतैर्ब्रूषे ॥ २॥

प्रकरोति करुणयाऽऽर्द्रान् शम्भुर्नम्रानिति प्रबोधाय ।
धर्मोऽयं किल लोकानार्द्राङ्कुरुतेऽद्य गौरीश ॥ ३॥

आर्द्रा नटेशस्य मनोऽब्जवृत्तिरित्यर्थसम्बोधकृते जनानाम् ।
आर्द्रर्क्ष एवोत्सवमाह शस्तं पुराणजालं तव पार्वतीश ॥ ४॥

बाणार्चने भगवतः परमेश्वरस्य
    प्रीतिर्भवेन्निरुपमेति यतः पुराणैः ।
सम्बोध्यते परशिवस्य यथान्धकं ततः
    करोति बाणार्चनं जगति भक्तियुता जनालिः ॥ ५॥

यथान्धकं त्वं विनिहत्य शीघ्रं लोकस्य रक्षामकरोः कृपाब्धे ।
तथाज्ञतां मे विनिवार्य शीघ्रं विद्यां प्रयच्छाशु सभाधिनाथ ॥ ६॥

इति श्रीकण्ठेशस्तोत्रं सम्पूर्णम् ।

Proofread by PSA Easwaran psaeaswaran at gmail.com

.. shrIkaNTheshastotram ..
was typeset using XƎLaTeX 0.99996
on March 25, 2017

